अतः य मान से उत्थापन देने पर राशियां $= \frac{क^2 - क}{२}$, क

द्वितीयालापानुसार

दोनों राशियों का योग $= \frac{क^2 - क}{२} + क =$ वर्गात्मक

$\therefore \frac{क^2 + क}{२} = प^2$

$\therefore क^2 + क = २प^2$

पक्षों को ४ में गुणने तथा दोनों में एक-एक जोड़ने पर

$४क^2 + ४क + १ = ८प^2 + १$

पक्षों का मूल ग्रहण करने पर

$२क + १ = \sqrt{८प^2 + १}$

द्वितीयपक्ष के मूलार्थ क = ६ मानने से 'इष्ट ह्रस्वं तस्य वर्ग' इत्यादि के द्वारा ज्येष्ठ = १७.

६ = कनिष्ठ = प्रकृतिवर्ण = प.

एवम् २क + १ = १७

$\therefore$ क = ८

अत उत्थापन से राशियां = २८, ८.

यहाँ कनिष्ठ यदि ३५ तो ज्येष्ठ = ९९

अतः २क + १ = ९९

$\therefore$ क = ४९

उत्थापन से राशियां = ४९

एवम् $\frac{(४९)^2 - ४९}{२} = ११७६.$

अथवा ग्रन्थकारोक्त ही दूसरा प्रकार

द्वितीयालाप घटित

कल्पित दो राशियां = २ य$^2$, ७ य$^2$,

प्रश्नानुसार $(२ य^2)^3 + (७ य^2)^2$

$= ८ य^6 + ४९ य^4 =$ वर्गात्मक $= क^2$.

प्रथम पक्ष का मूल वर्गप्रकृति के द्वारा लाना है प्रथमतः प्रथम पक्ष में य$^4$ से अपवर्त्तन दे दिया तो अपवर्तित प्रथम पक्ष $= ८ य^2 + ४९$

यदि इष्ट कनिष्ठ = २

तो ज्येठ$^2$=( २ )$^2$ × ८ + ४१ = ३२ + ४९ = ८१

∴ ज्येष्ठ = ९.

कनिष्ठ २ = प्रकृतिवर्ण = य.

चूंकि य के वर्ग वर्ग से अपवर्त्तन दिया गया है

अत: 'चेद्वर्गवर्गेण कृतोऽपवर्त्तः . कनिष्ठवर्गेण तदा निहन्यात् के अनुसार

( २ )$^2$ × ९ = ३६ = वास्तव ज्येष्ठ = पूर्वपद = क

य मान २ से उत्थापन देने पर

राशियाँ = ८, २८,

अथवा यदि कनिष्ठ = ७ तो ज्येष्ठ = २१ इसे कनिष्ठ वर्ग ४९ से गुणने पर वास्तव ज्येष्ठ=१०२९ = क.

एवम् ७ = य । अत: राशियाँ=९८, ३४३.

सभी आलाप आसानी से घट जायेंगे ।

'संभावते वर्णकृती तु यत्र' इत्यतेतद्विषयीभूतमुद्राहरणम् ।

**'ययोर्वर्गयुतिर्घातयुता मूलप्रदा भवेत् ।**
**तन्मूलगुणितो योगः सरूपश्चाशु तौ वद ।। ३ ।।**

अत्र राशी या १ का १ । अनोयर्वर्गयुतिर्घातयुता याव १ याकाभा १ काव १ । अस्या मूलं नास्तीति नीलकवर्गेण समामेतां कृत्वा पक्षयोः कालकवर्गं प्रक्षिप्य पक्षौ षट्त्रिंशता संगुण्य लब्धं नीलकपक्षमूलम् नी ६ । परपक्षास्यास्य याव ३६ याकाभा ३६ काव ३६ । यावतो मूलमस्ति तावतः "सभाविते वर्णकृती तु"–इत्यादिना मूलं गृहीतम् या ६ का ३ । शेषस्यास्य काव २७ । इष्टेन कालकेन हृतस्येष्टकालक-वर्जितस्य च दलेन का १३ । तन्मूलं समं कृत्वा लब्धं यावत्तावन्मानम् का $\frac{५}{३}$ । अनेन यावत्तावदुत्थाप्य जातौ राशी का $\frac{५}{३}$, का १ । अनयो-र्वर्गयुतेः काव $\frac{३४}{९}$ घातयुतायाः काव $\frac{४९}{९}$ मूलम् का $\frac{७}{३}$ । अनेन राशि-योगो का $\frac{८}{३}$ गुणितः काव $\frac{५६}{९}$ सरूपो जातः $\frac{\text{का ५६ रू ९}}{९}$ । अमुं पीतकवर्गसमं कृत्वा समच्छेदीकृत्य पक्षयोर्नवरूपाणि प्रक्षिप्य लब्धं कनिष्ठ मूलम् ६ वा १८० । एतत्कालकमानमित्यनेनोत्थापितौ राशी १०, ६ । वा ३००, १८० एवमनेकधा ।।

सुधा:—वे कौन सी दो राशियाँ हैं जिनके वर्गयोग में दोनों राशियों का गुणनफल जोड़ देते हैं तो योगफल वर्गात्मक हो जाता है । एवम् दोनों राशियों के योग को पूर्वमूल से गुणने पर भी गुणनफल मूलद होता है उन्हें बतलाओ ।

कल्पित दो राशियाँ = य, क,

प्रश्नानुसार दोनों का वर्गयोग + दोनों राशियों का गु० फल = य$^2$ + क$^2$ + य क = वर्गात्मक = न$^2$

∴ ३६ य$^2$ + ३६ य क + ३६ क$^2$ = ३६ न$^2$

प्रथम पक्ष में सभावित वर्णवर्गद्वय है अतः

'सभाविते वर्णकृती तु यत्र तन्मूलमादाय च शेषकस्य'

इत्यादि के अनुसार ३६ य$^2$+३६ य क+९ क$^2$ का मूल=६ य+ ३ क लेने पर शेष=२७ क$^2$ । इसमें इष्ट क से भाग लेने पर

$$\frac{२७ \text{ क}^2}{\text{क}} = २७ \text{ क} ।$$

$$\frac{२७ \text{ क} - \text{क}}{२} = १३ \text{ क} = ६ \text{ य} + ३ \text{ क}$$

$$\therefore १० \text{ क} = ६ \text{ य} \quad \therefore \text{ य} = \frac{१० \text{ क}}{६} = \frac{५ \text{ क}}{३}$$

अतः पूर्व कल्पित राशियाँ = $\frac{५\text{क}}{३}$, क,

इन दोनों राशियों से प्रथमालाप

$$\left(\frac{५ \text{ क}}{३}\right)^2 + \text{क}^2 + \frac{५\text{क}}{३} \times \text{क} =$$

$$\frac{२५ \text{ क}^2}{९} + \text{क}^2 + \frac{५ \text{ क}^2}{३} = \frac{३४ \text{ क}^2}{९} + \frac{५ \text{ क}^2}{३} =$$

$$\frac{३४ \text{ क}^2 + १५ \text{ क}^2}{९} = \frac{४९ \text{ क}^2}{९}$$ यह मूल प्रद हो जाता है।

$$\text{अतः राशियोग} = \left(\frac{५ \text{ क}}{३} + \text{क}\right) \times \frac{७ \text{ क}}{३} =$$

$$\frac{८ \text{ क} \times ७ \text{ क}}{३ \times ३} = \frac{५६ \text{ क}^2}{९} ।$$ राशियोग + १ =

$$\frac{५६ \text{ क}^2}{९} + १ = \text{वर्गात्मक} = \text{प}^2$$

$$\therefore ५६ \text{ क}^2 + ९ = ९ \text{ प}^2$$

यहाँ भी प्रथम पक्ष का मूल वर्गप्रकृति के द्वारा लाना है।

अर्थात् ५६क$^2$ + ९ = ९ प$^2$

$\sqrt{५६क^२ + ९} = ३प$

यहाँ प्रकृति = ५६ क्षेप = ९

कल्पित कनिष्ठ = ६ अतः ज्येष्ठ पद =

$\sqrt{३६ \times ५६ + ९} = \sqrt{२०१६+९} = \sqrt{२०२५} = ४५$

६ = कनिष्ठ = क, ज्येष्ठ = ३प

$\therefore प = \frac{५}{३} = १५$

क मान से उत्थापन देने पर

प्रथम राशि $= \frac{५क}{३} = \frac{५ \times ६}{३} = १०$

द्वितीय राशि = क = ६

यदि कनिष्ठ = १८० = क का मान

अतः य $= \frac{५क}{३} = \frac{१८० \times ५}{३} = ६० \times ५ = ३००$

द्वितीय राशि = १८० ।

इन राशियों से सभी आलाप घट जायँगे

यदि राशियाँ = १० । ६

तो दोनों का वर्गयोग = १००+३६ = १३६

दोनों का घात = ६० ।

योग करने पर = १९६ = $(१४)^२$

राशि योग = ( १० + ६ ) = १६

इसे पूर्वमूल से गुणित करने पर

१६ × १४ = २२४ ।

सरूप करने से २२४ + १ = २२५ = वर्गात्मक ।

**आद्योदाहरणम्—**

**राश्योर्ययोः कृतियुतिवियुती चैकेन संयुते वर्गौ ।**

**रहिते वा तौ राशी गणयित्वा कथय यदि वेत्सि ॥४॥**

अथ प्रथमोदाहरणे कल्पितौ राशिवर्गौ याव ४, याव ५ रू १ । अनयोर्योगवियोगौ रूपयुतौ मूलदौ भवतः । कथितप्रथमवर्गस्य मूलमेको राशिः या २ । द्वितीयस्यास्य याव ५ रू १ वर्गप्रकृत्या मूले क १ ज्ये २ वा क १७ ज्ये ३८ । अनयोर्ज्येष्ठपदं द्वितीयराशिः । ह्रस्वं

यावत्तावन्मानेनोत्थाप्याद्यराशिः । एवं जातौ राशी २, २ वा ३४, ३८ ।

अथ द्वितीयोदाहरणे तथैव कल्पितः प्रथमराशिः या २ । द्वितीयस्यास्य याव ५ रू१ । वर्गप्रकृत्या मूले क ४ ज्ये ९ वा क ७२ ज्ये १६१ । कनिष्ठेन प्रथम उत्थापितो ज्येष्ठं द्वितीय इति जातौ राशी ८, ९ वा १४४, १६१ ।

अत्राल्पराशिवर्गेण यो राशिरूनितो युतश्च मूलदः स्यात् स तावद्व्यक्त एव द्वितीयो ज्ञेयः । तस्यानयनेऽप्युपायस्तद्यथा—'

कल्पितराशिवर्गः ४ । अनेन द्वितीयराशिरूनितो युतश्च मूलदः स्यादित्ययं द्विगुणः ८ । वर्गान्तरमिदं कयोरपि च योगान्तरघातसमम् । अतोऽन्तरमिष्टं २ कल्पितं "वर्गान्तरं राशिवियोगभक्तम्' इति जाते वर्गान्तरयोगमूले १, ३ । आद्यस्य वर्गे १ कल्पितराशिवर्गं ४ प्रक्षिप्य द्वितीयस्य वर्गात् ९ वा विशोध्य जातो द्वितीयः ५ । अत्र चाल्पराशिवर्गस्तथा कल्प्यते यथा द्वितीयराशिरभिन्नः स्यात् । तथाऽन्यः कल्पितः ३६ । द्विगुणः ७२ । इदं वर्गान्तरम् । राश्यन्तरषट्के कल्पिते जातौ ३, ९ । अन्यवर्गात् ८१ कल्पितं विशोध्य जातो द्वितीयः ४५ । चतुष्केण वा ८५ द्विकेन वा ३२५ ।

अन्यथा कल्पने युक्तिः । राश्योर्घातेन द्विगुणेन वर्गयोगो युतोनितोऽवश्यं मूलदः स्यात् । राशिवधो द्विगुणो यथा वर्गः स्यात् तथैको वर्गोऽन्यो वर्गार्धमिति कल्प्यौ । यतो वर्गयोर्वधो वर्गो भवतीति तथा कल्पितौ । एको वर्गः १ । अन्यो वर्गार्धम् २ । अनयोर्घातो २ द्विगुणः ४ अयं प्रथमः । अयमल्पराशिवर्गः । तयोरेव वर्गयोगः ५ । अयं द्वितीयो राशिः ।

अथवैको वर्गः ९ । अन्यो वर्गार्धम् २ । अनयोर्घातो १८ द्विगुणः ३६ । अयमल्पराशिवर्गः । अथ तयोरेव वर्गयोगः ८५ । अयं द्वितीयो राशिः । एतौ व्यक्तौ यावत्तावद्गुणौ कल्पितौ । प्रथमोदाहरणे रूपयुतः द्वितीयो राशी रूपेणोनो द्वितीयोदाहरणे कार्यः । एवं कृत्वा तौ तथा राशिवर्गौ कल्पितौ यथाऽऽलापद्वयं घटते किन्तु प्रथमस्य मूलं गृहीत्वा द्वितीयस्य वर्गप्रकृत्या मूलमित्यादि पूर्वोक्तमेव । एवमनेकधा ।

सुधा—वे कौन सी राशियां हैं जिनका वर्गयोग या वर्गान्तर एक युक्त या एकोन होने पर वर्गात्मक होता है ? यदि जानकार हो तो बतलाओ ।

कल्पित प्रथम राशि वर्ग = $४ य^2$,

एवं द्वितीय राशि वर्ग = $५य^२ - १$

प्रश्नानुसार

राशि वर्ग योग + १ = वर्गात्मक = $४य^2 + ५य^2 - १ + १ = ९ य^2$

= वर्गात्मक ।

एवं राशिवर्गान्तर+१ = वर्गात्मक $५य^२ - १ - ४य^२ + १ = य^2$ = वर्गात्मक ।

$\therefore$ प्रथम राशिवर्ग = $४य^२$

$\therefore$ प्रथम राशि = २य

द्वितीय राशि$^२$ = $५य^2 - १$

$\therefore$ द्वितीय राशि = $\sqrt{५य^२ - १}$

वर्ग प्रकृति द्वारा यदि कनिष्ठ = १ तो 'इष्टं ह्रस्वं तस्य वर्गः' आदि के अनुसार ज्येष्ठपद = २, वा यदि कनिष्ठ = १७ तो ज्येष्ठ पद = ३८ कनिष्ठ = य = १ अतः उत्थापन देने से

प्रथम राशि = २, यदि कनिष्ठ = १७ = य तो प्रथमराशि = ३४,

द्वितीय राशि = $\sqrt{५ - १} = २$ वा $\sqrt{१७^2 \times ५ - १} =$

$\sqrt{२८९ \times ५ - १} = ३८$ ।

द्वितीयालापानुसार दोनों के वर्गयोग में एक घटाने से भी वर्गात्मक होता है $\therefore$ दोनों का वर्ग योग − १ = वर्गात्मक

द्वितीयालाप में कल्पित प्रथम राशिवर्ग = $४य^२$

कल्पित द्वितीय राशिवर्ग = $५य^२ + १$

अतः वर्गयोग = $५य^२ + १ + ४य^२ = ९य^२ + १$

अतः रूपोन वर्गयोग = $९य^2 = (३य)^2$ = वर्गात्मक ।

एवं रूपरहितवर्गान्तर = $५य^2 + १ - ४य^२ - १ = य^2 = (य)^२$

= वर्गात्मक ।

अतः प्रथम राशिवर्ग का मूल = २य = प्रथम राशि ।

एवं द्वितीय राशि = $\sqrt{५य^२ + १}$

यहाँ वर्ग प्रकृति द्वारा यदि कनिष्ठ = ४

तो ज्येष्ठपद = ९

य = कनिष्ठ = ४,

अतः प्रथम राशि = २य = ८

द्वितीय राशि = ९

अथवा यदि कनिष्ठ = ७२ तो ज्येष्ठपद = १६१

∴ प्रथमराशि = २य = ७२ × २ = १४४

द्वितीय राशि = १६१

मूलगतगद्य "अत्राल्पराशिवर्गेण यो राशिरूनितो युतश्च मूलदः स्यात् स तावद्व्यक्तएव, द्वितीयोज्ञेयः। तस्यानयनेऽप्युपाय" स्तद्यथा—के अनुसार

कल्पित लघुराशि = २ = व्यक्त

∴ लघु राशिवर्ग = ४, इस से ऊनयुत द्वितीय राशि मूलद है अतः २ × लघुराशि वर्ग = ४ × २ = ८ यह किसी दो राशियों का वर्गान्तर है। किन्तु वर्गान्तर = योग × अन्तर।

अतः यदि कल्पित अन्तर = २ तो $\frac{८}{२}$ = ४ = योग

संक्रमण से दो राशियाँ = १, ३,

इनमें वर्गान्तर मूल = १, वर्गयोग मूल = ३,

आद्यवर्ग १ + कल्पितराशिवर्ग = १ + ४ = ५ = द्वितीयराशि अथवा ३ के वर्ग = ९। ९ − कल्पितराशिवर्ग = ९ − ४ = ५ = द्वितीयराशि

यहाँ लघुराशि ऐसी हो जिससे द्वितीय राशि अभिन्न आवे।

यदि कल्पित लघुराशिवर्ग = ३६ तदा ३६ × २ = ७२ यह भी किसी दो राशियों का वर्गान्तर है, यदि कल्पित राश्यन्तर=६ तो $\frac{७२}{६}$ = योग = १२

संक्रमण से राशिद्वय = ३, ९, वर्गान्तर मूल = ३

तथा वर्गयोगमूल = ९

अतः प्रथम राशि के वर्ग = ९। इसमें कल्पित राशि वर्ग ३६ जोड़ने से ९ + ३६ = ४५ = = द्वितीय राशि।

अथवा द्वितीय राशि वर्ग ८१ में कल्पित राशि वर्ग ३६ घटाने पर भी वहीं द्वितीय राशि = ४५।

अथवा कल्पित राशि ६ के वर्ग ३६ को द्विगुण किया ३६ × २ = ७२ = वर्गान्तर। कल्पित राश्यन्तर = ४ से भाग देने पर लब्धि = १८=राशि योग

सङ्क्रमण से राशिद्वय=७, ११,

अतः प्रथम राशि वर्ग ४९ में कल्पित राशि वर्ग ३६ जोड़ने पर

४९ + ३६ = ८५।

अथवा यदि राश्यन्तर = २ तो द्वितीय राशि=३२५।

अथवा ग्रन्थकार की ही राशि कल्पनार्थ—

दूसरी युक्ति—

चूँकि $२य \times क$ को $य^2 + क^2$ में जोड़ने या घटाने से अवश्य मूलात्मक होता है यथा $य^2 + २ यक + क^2 = (य + क)^2$

$य^2 - २ यक + क^2 = (य - क)^2$

अतः ऐसी दो राशियाँ कल्पित की जिनमें एक वर्गात्मक और दूसरी राशि वर्गार्ध हो जिससे दोनों का घात द्विगुणित होने पर वर्गात्मक हो जाय।

ऐसी राशियाँ = १, २, इन दोनों का घात को द्विगुणित करने पर $१ \times २ \times २ = ४$ = लघुराशिवर्ग दोनों राशियों का वर्ग योग=१+४=५=द्वितीय राशि अथवा एक राशि वर्गात्मक=९ दूसरी राशि वर्गार्ध = २ यदि मानी जाय तो इन दोनों का द्विगुण घात = ३६=लघुराशि वर्ग।

इन दोनों का वर्ग योग $= ९^2 + २^2 = ८१ + ४ = ८५$ द्वितीय राशि हुई।

दोनों व्यक्त राशि यावत्तावद्वर्ग गुणित कल्पित है।

प्रथमोदाहरण में रूपोन दूसरी राशि और द्वितीय उदाहरण में रूप युक्त द्वितीय राशि जैसे प्रथमोदाहरण में $य^2 - १$, और द्वितीयोदाहरण में $य^2 + १$, द्वितीय राशि है।

वासना—अत्र कल्पित राशिवर्गः ४। अनेन द्वितीयराशिरूनितो युतश्च मूलदः स्यादित्ययं द्विगुण इत्यादि मूक्तगतगद्यस्य वासना :—

कल्प्यते $क^2 = य - इ^2$। एवम् $न^2 = य + इ^2$

अनयोरन्तरम्

$$न^2 - क^2 = २इ^2$$

यदि $न - क = इ'$ तदा

$$न + क = \frac{२इ^2}{इ'}$$

अतः सङ्क्रमणेन

$$क = \frac{\frac{२इ^2}{इ'} - इ'}{२}$$

$$न = \frac{\frac{२इ^2}{इ'} + इ'}{२}$$

$$य = क^2 + इ = न^2 - इ^2$$

एतेनोपपन्नं मूलोक्तगद्यम्

अथ कस्याप्युदाहरणम्—

**यत् स्यात् साल्पवधार्धतो घनपदं यद्वर्गयोगात् पदं**
**यद्योगान्तरयोर्द्विकाभ्यधिकयोर्वर्गान्तरात् साष्टकात् ।**
**यच्चैतत्पदपञ्चकं तु मिलितं स्याद्वर्गमूलप्रदं**
**तौ राशी कथयाशु निश्चलमते षट्काष्टकाभ्यां विना । ५॥**

साल्पवधस्यार्धाद्घनपदं ग्राह्यम् । अत्रालापानां बहुत्वेऽसकृत् क्रिया कार्या सा न निर्वहत्यतो बुद्धिमता तथा राशी कल्प्यौ यथैकेनैव वर्णेन सर्वेऽप्यालापा घटन्ते ।

तथा कल्पितौ राशी याव १ रू १̇, या २ । अनयोः साल्पवधार्धतो घनपदम् या १ । वर्गयोगात् पदम् याव १ रू १ । द्व्यधिकयोगपदम् या १ रू १ । द्व्यधिकान्तरपदम् या १ रू १̇ । साष्टवर्गान्तरपदम् याव १ रू ३̇ । एषां योगः याव २ या ३ रू २̇ अयं वर्ग इति कालकवर्गसमं कृत्वा पक्षावष्टभिः संगुण्य पञ्चविंशतिरूपाणि प्रक्षिप्य प्रथमपक्षस्य मूलम् या ४ रू ३ । परपक्षस्यास्य काव ८ रू २५ वर्गप्रकृत्या मूले क ५ ज्ये १५ वा क ३० ज्ये ८५ वा क १७५ ज्ये ४९५ । ज्येष्ठं पूर्वपदेन समं कृत्वा लब्धं यावत्तावन्मानम् ३, वा $\frac{४१}{२}$, वा १२३ । अनेनोत्थापितौराशी ८, ६ वा $\frac{१६७७}{४}$, ४१ वा १५१२८, २४६ । एवमनेकधा ।

अथवा यावत्तावद्वर्गो यावत्तावद्द्वयेन युत एको राशिः याव १ या २ यावत्तावद् द्वयं रूपद्वययुतमन्यराशिः या २ रू २ । अथवा यावत्तावद्वर्गो यावत्तावद् द्वयोन एको राशिः याव १ या २̇ । यावत्तावद् द्वयं रूपद्वयोनमन्यराशिः या २ रू २̇ । अथवा यावत्तावद्वर्गो यावत्तावच्चतुष्टयं रूपत्रययुतं चैको राशिः याव १ या ४ रू ३ । यावत्तावद् द्वयं रूपचतुष्टयं चान्यः या २ रू ४ ॥

सुधा : वे कौन सी दो राशियाँ है, जिनके गुणनफल में छोटी राशि जोड़ कर आधा करने पर धनात्मक बन जाती हैं, जिन दोनों का वर्ग योग भी मूलप्रद हो जाता है, दोनों के योग या अन्तर में दो जोड़ने पर भी मूल मिलता है, दोनों राशियों के वर्गान्तर में आठ जोड़ने पर भी वर्गमूल हो जाता है, और उपर्युक्त पाँचों मूलों का योग भी वर्गमूल प्रद होता है । छे आठ के अतिरिक्त उन दोनों राशियों को बतलाओ ।

यहाँ कल्पित राशियाँ $=$ य$^{२}$ $-$ १, २य,

इन दोनों राशियों पर से अन्तिमातिरिक्त सभी आलाप घट जाते हैं।

जैसा कि $\frac{\text{राशिद्वय घात} + \text{छोटी राशि}}{२}$

$= \frac{(य^२ - १) + २य}{२} = \frac{२य^३ - २य + २य}{२} = य^३ =$ घनमूलप्रद,

वर्गयोग $= य^४ + २य^२ + १ =$ मूलप्रद

राशिद्वययोग $+ २ = य^२ - १ + २य + २$

$= य^२ + २य + १ =$ वर्गमूलप्रद

राशिद्वयान्तर $= य^२ - १ - २य$ ।

राशिद्वयान्तर $+ २ = य^२ - २य + १ =$ वर्गमूलद

दोनों राशियों का वर्गान्तर $+ ८ =$

$य^४ - २य^२ + १ - ४य^२ + ८ =$

$य^४ - ६य^२ + ९ =$ वर्गमूलद

पदपञ्चकयोग =

$य + य^२ + १ + य + १ + य - १ + य^२ - ३ =$

$२य^२ + ३य - २$ यह प्रश्नानुसार वर्गात्मक है,

अत: इसे $क^२$ के समान माना

$२य^२ + ३य - २ = क^२$

$\therefore\ २य^२ + ३य = क^२ + २$

$\therefore\ १६य^२ + २४य = ८क^२ + १६$

पक्षद्वय से ९ जोड़ने पर

$१६य^२ + २४य + ९ = ८क^२ + २५$

मूलग्रहण करने पर

$४य + ३ = \sqrt{८क^२ + २५}$

अतः वर्ग प्रकृति की प्रवृत्ति हुई, कल्पित कनिष्ठ = ५ तो ज्येष्ठ = १५

यदि कनिष्ठ = ३०, तो ज्येष्ठ = ८५

यदि वा कनिष्ठ १७५ तो ज्येष्ठ = ४९५ ।

तीनों ज्येष्ठ पद पूर्वपद ( $४य+३$ ) के समान है

अतो यदि $४य+३=१५$ तो $य=३$

यदि $४य+३=८५$ तो $य=\frac{४१}{२}$

यदि $४य+३=४९५$ तो $य=\frac{४९२}{४}=१२३$

अतः उत्थापन देने से—

प्रथम राशि $=$ य$^2$ $-$ १ $=$ ८

द्वितीय राशि $=$ २य$=$६

वा प्रथमराशि$=$य$^2$ $-$ १$= \left(\frac{४१}{२}\right)^2 -$ १$=\frac{१६८१}{४} -$ १

$= \frac{१६७७}{४}$

द्वितीय राशि$=$२य $= \frac{४१}{२} \times$ २ $=$ ४१

अथवा प्रथम राशि $=$ ( १२३ )$^2$ $-$ १ $=$ १५१२८

द्वितीय राशि $=$ १२३ $\times$ २ $=$ २४६

ग्रंथोक्त ही दूसरा प्रकार

कल्पित राशियाँ $=$ य$^2$ $+$ २य, २य $+$ २

इन दोनों के घात में अल्प राशि जोड़ने पर

( य$^2$ $+$ २य ) ( २य $+$ २ ) $+$ २य $+$ २ $=$

२य$^3$ $+$ ४य$^2$ $+$ २य$^2$ $+$ ४य $+$ २य $+$ २$=$

२य$^3$$+$६य$^2$ $+$ ६य $+$ २ ।

इसका आधा $=$ य$^3$$+$३य$^2$ $+$ ३य $+$ १ $=$ ( य $+$ १ )$^3$

दोनों राशियों का वर्गयोग $=$

य$^4$ $+$ ४ य$^3$$+$४ य$^2$$+$४ य$^2$$+$८ य$+$४

$=$य$^4$$+$४ य$^3$$+$८य$^2$ $+$८ य$+$४

$=$( य$^2$$+$२ य$+$२ )$^2$

राशिद्वय योग $+$ २ $=$य$^2$ $+$ २ य$+$२ य$+$२ $+$ २ $=$

$=$ य$^2$$+$४ य$+$४$=$( य$+$२ )$^2$

राशिद्वयान्तर $+$ २ $=$ य$^2$$+$२ य $-$ २ य $-$ २$+$२$=$य$^2$$=$(य)$^2$

राशिद्वय वर्गान्तर$+$८$=$य$^4$$+$४ य$^3$$+$४ य$^2$ $-$ ४य$^2$ $-$ ८ य $-$ ४$+$८

$=$य$^4$$+$४ य$^3$ $-$ ८ य$+$४

$=$( य$^2$$+$२ य $-$ २ )$^2$

पद पञ्चक का योग $=$ य $+$ १, $+$य$^2$$+$२ य$+$२, $+$ य$+$२, $+$य$+$य$^2$ $+$ २ य $-$ २ $=$ २ य$^2$ $+$७ य $+$ ३ यह प्रश्नानुसार वर्गात्मक है

अतः २ य$^2$$+$७ य$+$३$=$क$^2$

$\therefore$ २ य$^2$$+$७ य $=$ क$^2$ $-$ ३

$\therefore$ १६ य$^2$$+$५६ य $=$ ८ क$^2$ $-$ २४

दोनों पक्षों में ४९ जोड़ने पर

$१६ य^2+५६ य+४९=८ क^2+२५$

$\therefore \sqrt{१६ य^2+५६ य+४९}=\sqrt{८ क^2+२५}$

$\therefore ४ य+७=\sqrt{८ क^2+२५}$

वर्गप्रकृति से कल्पित कनिष्ठ = ५ तो

$(५)^2 \times ८+२५=२००+२५=२२५$

$\sqrt{२२५}=१५=$ज्येष्ठ पद

यदि कनिष्ठ = ३० तो ज्येष्ठपद = ८५

ज्येष्ठ पद = $१५=४ य+७ \therefore ४ य=८$

$\therefore य=२$

अतः प्रथम राशि $=४+४=८$

द्वितीय राशि $=२ य+२=६$

यदि $४ य+७=८५=$ज्येष्ठपद

$४ य=७८ \therefore य=\frac{७८}{४}=\frac{३९}{२}$

$\therefore$ प्रथम राशि $य^2+२ य=\left(\frac{३९}{२}\right)^2+३९$

$=\frac{१५२१}{४}+\frac{१५६}{४}=\frac{१६७७}{४}$

द्वितीय राशि $=\frac{३९}{२}\times २+२=३९+२=४१$

अथवा राशियाँ $=य^2-२ य,\ २ य-२$, तो

उपर्युक्त रीति से $य=\frac{४३}{२}$,

यदि वा प्रथम राशि $=य^2+४ य+३$ तो

$य=\frac{३७}{२}$

द्वितीय राशि $=२ य+४=४१$

उत्थापन से राशियों का मान तथा सभी आलापों का घटना देख लेना चाहिए।

एवं सहस्रधा गूढ़ा मूढ़ानां कल्पना यतः।
क्रियया कल्पनोपायस्तेषां मेव च कथ्यते ॥

इस तरह अनेक प्रकार की कल्पना मन्दबुद्धियों के लिए गूढ़ है, अतः क्रिया द्वारा राशि कल्पना की युक्ति बतलाता हूँ।

अथ सूत्रं वृत्तद्वयम्

**सरूपमव्यक्तमरूपकं वा वियोगमूलं प्रथमं प्रकल्प्य ।**
**योगान्तरक्षेपकभाजिताद्यद्वर्गान्तरक्षेपकतः पदं स्यात् ।।११।।**
**तेनाधिकं तत्तु वियोगमूलं स्याद्योगमूलं तु तयोस्तु वर्गौ ।**
**स्वक्षेपकोनौ हि वियोगयोगौ स्यातां ततः संक्रमणेन राशी।।१२।।**

सुधा :—प्रथमतः सरूप या अरूप अव्यक्त को वियोग मूल माने योगान्तर क्षेप से वर्गान्तक्षेप में भागफल का जो मूल हो, उसे योग मूल समझें। उपर्युक्त योग मूल एवं वियोगमूल के वर्गों में अपना२ क्षेप घटा दें तो शेष क्रमशः योग और वियोग होंगे।

योग वियोग ज्ञान से सङ्क्रमण गणित द्वारा राशिद्वय का ज्ञान करना चाहिए।

वासना—कल्पते योगान्तक्षेप मानम् = क्षे

वर्गान्तरक्षेपमानम् = क्षे'

वर्गयोगक्षेपमानम् = क्षे'' ।

वियोगमूलम् = य, योगमूलम् = क ।

प्रश्नानुसारेण :—$\text{वियोगः} = \text{य}^2 - \text{क्षे}$, $\text{योगः} = \text{क}^2 - \text{क्षे}$,

$$\text{अतोऽल्पराशिः} = \frac{\text{क}^2 - \text{य}^2}{2},$$

$$\text{बृहद्राशिः} = \frac{\text{क}^2 + \text{य}^2 - 2\text{क्षे}}{2}$$

बृहद्राशि वर्ग =

$$\frac{\text{क}^4 + 2\text{य}^2.\text{क}^2 - 4\,\text{क्षे}.\text{क}^2 + \text{य}^4 - 4\text{क्षे}\,\text{य}^2 + 4\,\text{क्षे}^2}{4}$$

$$\text{अल्पराशिवर्गः} = \frac{\text{क}^4 - 2\text{य}^2.\text{क}^2 + \text{य}^4}{4}$$

$$\text{वर्गान्तरम्} = \frac{4\text{य}^2.\text{क}^2 - 4\,\text{क्षे}.\text{य}^2 - 4\text{क्षे}\,\text{क}^2 + 4\text{क्षे}^2}{4}$$

$$= \text{य}^2.\text{क}^2 - \text{क्षे}.\text{य}^2 - \text{क्षे}.\text{क}^2 + \text{क्षे}^2 =$$

$$\text{य}^2.\text{क}^2 - 2\text{य}.\text{क}\,\text{क्षे} + \text{क्षे}^2 - \text{क्षे}\,\text{य}^2 + 2\text{य}.\text{क}\,\text{क्षे} - \text{क्षे}.\text{क}^2$$

$= (\text{य}.\text{क} - \text{क्षे})^2 - \text{क्षे}\,(\text{य}^2 - 2\text{य}.\text{क} + \text{क}^2)$ अत्र यदि

क्षे ($य^2$ − २यक + $क^2$) इदं क्षेप मानं तदा (य.क − क्षे) इद-मवश्यं निरवयवम्। अतो वर्गान्तर क्षेपमानम् = क्षे′ =
क्षे ($य^2$ − २ य क + $क^2$)

$$\therefore \frac{क्षे'}{क्षे} = य^2 - यक + क^2$$

मूलग्रहणेन $क - य = \sqrt{\frac{क्षे'}{क्षे}} =$ मूल

$$\therefore मू + य = क ।$$

एतेन सर्वमुपपन्नम्। वासनेय विशेषकृता सर्वैरपि व्याख्याकारैः संशोधकै-र्वाऽविकलमुद्धृतातीवोपयुक्ता च।

यद्यत्र $\frac{क्षे}{क्षे} = \frac{0}{0}$ तदाऽस्य मानं कियदितिज्ञानं

दुर्घटमतस्तदाऽऽचार्योक्तानुसारेण न राशिकल्पना समीचीनाऽतोऽस्मभि-रन्यथा राशिकल्पनोपायो यतित इति विशेषचरणानामेवोक्तिः।

राशिकल्पनोपायो यथा :—कल्प्यते $\sqrt{\frac{क्षे}{क्षे}} = प$

ततः क=य+प

$$पूर्वराशिद्वयवर्गयोगः = \frac{२य^४ + २क^४ - ४ क्षे य^२ - ४ क्षे क^2 + ४क्षे^2}{४}$$

$$= \frac{२य^४ + २ (य + प)^४ - ४ क्षे य^2 - ४ क्षे (य+प)^2 + ४ क्षे^2}{४}$$

$$= \frac{२य^४ + २य^४ + ८य^3 प + १२ य^२ प^२ + ८ यप^3 + २प^४ - ४क्षे य^2}{४}$$

$$+ \frac{- ४ क्षे य^2 - ८ क्षे. य, प - ४ क्षे प^२ + ४ क्षे^2}{४}$$

$$= य^४ + २य^3. प + ३य^2. प^2 + २य प^3 - क्षे य^2 \frac{+ प^४ - २ य^२ क्षे}{२}$$

$- \text{क्षे}\, \text{य}^2 - २\, \text{क्षे}.\, \text{य}.\, \text{प} - \text{क्षे}.\, \text{प}^२ + \text{क्षे}^2 =$

$\text{य}^४ + २\text{य}^3.\, \text{प} + \text{य}^2\, (३\text{प}^2 - \text{क्षे}) + \text{य}\, (२\text{प}^3 - २\, \text{क्षे}.\, \text{प}.) - \text{क्षे}.\, \text{य}^2 +$

$\frac{\text{प}^४}{२} + \text{क्षे}^2 - \text{क्षे}.\, \text{प}^२$

$= \text{य}^४ + २\text{य}^3.\, \text{प} + \text{य}^2\, (३\text{प}^2 - २\text{क्षे}) + \text{य}\, (२\, \text{प}^3 - २\, \text{क्षे}.\, \text{प}),$

$+ \frac{\text{प}^४}{२} + \text{क्षे}^२ - \text{क्षे}.\, \text{प}^२ =$

$\text{य}^४ + २\text{य}^3.\text{प} + \text{य}^२.\, \text{प}^2 - \text{य}^2\, \text{प}^२ + \text{य}^2\, (३\text{प}^२ - २\, \text{क्षे}) +$

$\text{य}\, (२\text{प}^3 - २\, \text{क्षे}.\, \text{प}) + \frac{\text{प}^४}{२} + \text{क्षे}^2 - \text{क्षे}.\, \text{प}^2$

$= (\text{य}^2 + \text{य}.\, \text{प})^2 + २\text{य}^२\, (\text{प}^2 - \text{क्षे}) + \text{य}\, (२\text{प}^3 - २\, \text{क्षे}.\, \text{प}) +$

$\frac{\text{प}^४}{२} + \text{क्षे}^2 - \text{क्षे}.\, \text{प}^2$

$= (\text{य}^2 + \text{यप})^२ + २\, (\text{प}^२ - \text{क्षे})\, (\text{य}^2 + \text{य}.\, \text{प}) + (\text{प}^2\ \ \text{क्षे})^2 +$

$\text{य}^2\, (२\text{य}^2 - २\text{क्षे}) + \text{य}\, (२\text{प}^3 - २\, \text{क्षे}.\, \text{प})$

$- २\, (\text{प}^2 - \text{क्षे})\, (\text{य}^2 - \text{य}.\, \text{प}.) - (\text{प}^२ - \text{क्षे}^2) + \frac{\text{प}^४}{२} + \text{क्षे}^२ - \text{क्षे}.\, \text{प}^2$

$= \{ (\text{य}^2 + \text{य}.\, \text{प}) + (\text{प}^2 - \text{क्षे}) \}^2 + \text{य}^2\, (२\text{प}^2 - २\, \text{क्षे}) +$

$२\, (\text{प}^2 - \text{क्षे})\, \text{य}.\, \text{प}$

$- \text{य}^२\, (२\text{प}^2 - २\text{क्षे}) - २\, (\text{प}^2 - \text{क्षे})\, \text{य}.\, \text{प} - (\text{प}^२ - \text{क्षे})^2$

$+ \frac{\text{प}^४}{२} + \text{क्षे}^2 - \text{क्षे}.\, \text{प}^२$

$= \{ (\text{य}^2 + \text{य}.\, \text{प}) + (\text{प}^2 - \text{क्षे}) \}^2 + \frac{\text{प}^४}{२} - \text{प}^४ + २\, \text{क्षे}.\, \text{प}^२ - \text{क्षे}^2 + \text{क्षे}^2$

$- \text{क्षे}.\, \text{प}^2$

$= \{ (\text{य}^2 + \text{य}.\, \text{प}) + (\text{प}^२ - \text{क्षे}) \}^2 - \frac{\text{प}^४}{२} + \text{क्षे}'$

अतो यदि वर्गयोगक्षेप मानम् = $\frac{प^४}{२}$ – क्षे इदं भवेत्तदाऽवश्यं निरवयवं मूलम् (य² + य. प) + (प² –क्षे) इदं स्यात् । तथा कृते जातं वर्गयोगक्षेप मानम् = क्षे" $\frac{प^४}{२}$ – क्षे' ।

∴ प⁴ = २ (क्षे" + क्षे)

ततः प = $\sqrt[४]{२(क्षे'' + क्षे)}$

अनेन विशेषोक्तमिदम् :—

वर्गान्तरक्षेपकसंमितिर्युता क्षेपेण कृत्योर्युतिजेन वै ततः ।
द्विघ्न्याः पदंतत्पदयुग् वियोगजं मूलं युते मूलमतस्तयोर्मिती ॥

सूत्र मुपपद्यते ।

तदीयः प्रश्नश्च.

यस्यात् व्यल्पवधार्धतो घनपदं वर्गान्तराद्यत्पदं
यद्योगात्पद मन्तरादपि पदं मातङ्गयुक्तात्पदम् ।
यत्कृत्योर्युतितोऽथ सर्वपदजो योगो विरूपो भवेत्
विद्वन् मूलद एव तौ वद शपद्यस्तीह चेत्ते गतिः ॥

अत्र राशिकल्पने ह्याचार्योक्तं सूत्रं व्यभिचरति विशेषोक्तं तु आचार्योक्तोदाहरणयोरत्राप्यव्यभिचारीति सुधीभिर्भृशं विभावनीयम् ।

उदाहरणम

**राश्योर्योगवियोगकौ त्रिसहितौ वर्गौ भवेतां ययो-**
**र्वर्गैक्यं चतुरूनितं रवियुतं वर्गान्तरं स्यात् कृतिः ।**
**साल्पं घातदलं घनः पदयुतिस्तेषां द्वियुक्ता कृति-**
**स्तौ राशी वद कोमलामलमते षट्सप्त हित्वाऽपरौ ॥६॥**

अत्र रूपोनमव्यक्तं वियोगमूलं प्रकल्प्य या १ रु १̇ । अत्राप्यनयैव युक्त्या कल्पितौ राशी याव १ रू २̇, या २ । वा कल्पितौ राशी याव १ या २ रू १̇, या २ रू २ । राश्योर्योगस्त्रिसहितः याव १ या २ रू १ । राश्योरन्तरं त्रिसहितम् याव १ या २̇ रू १ । प्रथमराशिवर्गः= यावव १ याव ४̇ रू ४ । द्वितीयराशिवर्गः= याव ४ । अनयोरैक्यं चतुरूनम् यावव १ । तयोरेवान्तरं रवियुतम् यावव १ याव ८̇ रू १६.

राशिघातः याघ २ या ४̇ । दलम् याघ १ या २̇ । साल्पं याघ १ । एभ्यो मूलानि तत्र त्रियुतयोगमूलं या १ रू १ । त्रियुतवियोगमूलं या १ रू १̇ । चतुरूनिवर्गैक्यमूलम् याव १ । रवियुतवर्गान्तरमूलम् याव १ रू ४̇ तथा घनमूलम् या १ । पदपञ्चकयोगो द्वियुतो जातः याव २ या ३ रू २̇ एष वर्ग इति कालकवर्गेण समीकरणाय न्यासः—

याव २ या ३ काव ० रू २̇ ।
याव̇ ० या ० काव १ रू̇ ० ।

समीकरणात् पक्षशेषौ याव २ या ३, काव १ रू २ । अत्रैतावष्टभिः संगुण्य नव रूपाणि प्रक्षिप्याद्यपक्षस्य मूलम् या ४ रू ३ । परपक्षस्यास्य काव ८ रू २५ । वर्गकृत्या मूले क ५ ज्ये १५ वा क १७५ ज्ये ४९५ । ज्येष्ठं प्रथमपक्षमूलसमं कृत्वाऽऽप्तं यावत्तावन्मानं ३ वा १२३ । वर्गेणाद्यं केवलनान्त्यमुत्थाप्य जातौ राशी ७, ६ वा १५१२७, २४६ ।

अथवा कल्पितद्वितीयराश्योर्योगस्त्रियुतः—

याव १ या ४ रू ४ । वियोगस्त्रियुतः याव १ । अत्राद्यवर्गः

यावव १ याघ ४ याव २ या ४̇ रू १ । द्वितीयाराशिवर्गः याव ४ या ८ रू ४ । अनयोरैक्यं चतुरूनम् यावव १ याघ ४ याव ६ या ४ रू १ । वर्गान्तरं रवियुतं यावव १ याघ ४ याव २̇ या १२̇ रू ९ ।

राशिघातः याघ २ याव ६ या २ रू २̇ ।

दलम् याघ १ याव ३ या १ रू १̇ ।

साल्पं याघ १ याव ३ या ३ रू १ । एभ्यो मूलानि तत्र—

| | |
|---|---|
| त्रियुतयोगमूलम् | या १ रू २ । |
| त्रियुतवियोगमूलम् | या १ । |
| चतुरूनितवर्गैक्यमूलम् | याव १ या २ रू १ । |
| रवियुतवर्गान्तरमूलम् | याव १ या २ रू ३̇ । |
| घनमूलम् | या १ रू १ । |

पदपञ्चकयोगो द्वियुक्तः याव २ या ७ रू ३ । वर्ग इति कालकवर्गेण समीकरणाय—

न्यासः:—
याव २ या ७ काव० रू ३ ।
याव ० या ० काव १ रू ० ।

समशोधनात् पक्षशेषौ याव २ या ७, का रू ३̇ । अत्र पक्षावष्टभिः संगुण्यैकोनपञ्चाशद्रूपाणि प्रक्षिप्याद्यपक्षमूलं या ४ रू ७ । परपक्षस्यास्य काव ८ रू ५ । वर्गप्रकृत्या मूले क ५ ज्ये १५ वा क १७५ ज्ये ४९५ ।

ज्येष्ठं प्रथमपक्षपदेन समं विधाय लब्धं यावत्तावन्मानम् २ वा १२२। अत्र वर्गेणव्यक्तवर्गराशि केवलेनाव्यक्तमुत्थाप्य जातौ राशी ७, ६ वा १५१२७, २४६।

तद्यथा या २। अस्या वर्गः ४। अनेन याव १ गुणितः ४। केवलेन २ या २ गुणितः ४। उभयोर्व्यक्तत्वाद्योगः ८। ऋणये रूपे १ वियोजितो जात एकः ७ तथा या २ केवलेन या २ गुणितः ४ रूप २ युतो जातः परः ६। एवं द्वितीयः या १२२। वर्गः १४८८४। अनेन याव १ गुणितः १४८८४। केवलेन १२२ या २। गुणितः २४४। उभयोर्व्यक्तयोर्योगादृणं रूपं विशोध्य जात एकः १५१२७। तथा या २ केवलेन १२२ गुणितो व्यक्तरूप-३ युतोऽपरः २४६। एवं बहुधा॥

सुधाः– वे कौन सी दो राशियाँ हैं जिनका योग एवं अन्तर त्रियुक्त होने पर, वर्गैक्य चतुरूनित होने पर वर्गान्तर द्वादशयुक्त होने पर, वर्गात्मक बन जाता है

घातार्ध अल्प राशि युक्त होने पर घन हो जाता है
इस प्रकार आगत मूल योग द्वियुक्त होने पर वर्ग हो जाता है, छे आठ के अतिरिक्त उन दोनों राशियों को कहो।

राशि कल्पनार्थं कल्पित वियोग मूल=य−१,
यहाँ वर्गान्तर क्षेप=१२ योगान्तर क्षेप= ३

$$\text{अतः योग मूल} = \sqrt{\frac{\text{वर्गान्तर क्षेप}}{\text{योगान्तर क्षेप}}} + \text{वियोग मूल}$$

$$= \sqrt{\frac{१२}{३}} + \text{वियोग मूल} = २ + (\text{य}-१) = \text{य}+१$$

अत्र "तयोस्तु वर्गौ स्वक्षेपकोनौ तदा वियोगयोगौ" के अनुसार

$$\text{वियोगमूल}^{२} - ३ = \text{य}^{२} - २\,\text{य} + १ - ३ = \text{य}^{२} - २\,\text{य} - २ = \text{वियोग}।$$

$$\text{एवं योग मूल}^{२} - ३ = \text{य}^{2} + २\,\text{य} + १ - ३ = \text{य}^{2} + २\text{य} - २ = \text{योग}.$$

ततः सङ्क्रमण के द्वारा लघुराशि=

$$\frac{\text{योग}-\text{वियोग}}{२} = \frac{\text{य}^{2} + २\,\text{य} - २ - (\text{य}^{2} - २\,\text{य} - २)}{२}$$

$$= \frac{४\text{य}}{२} = २\,\text{य}$$

$$\text{एवं बृहद्राशि} = \frac{\text{योग}+\text{वियोग}}{२} = \frac{२\,\text{य}^{2} - ४}{२} = \text{य}^{2} - २.$$

अतः लघु राशि=२ य, बृहद्राशि=$य^2$–२.
अब प्रश्नानुसार

दोनों राशियों के योग में तीन जोड़ने पर $य^2-२+२ य+३=य^2+२ य+१$
$=(य+१)^2$

दोनों राशियों के अन्तर में ३ जोड़ने पर $य^2-२ य+१=(य-१)^2$

दोनों राशियों के वर्गैक्य में चार घटाने पर

$य^4-४ य^2+४+४ य^2-४=य^4=(य^2)^2$

दोनों राशियों के वर्गान्तर में १२ जोड़ने पर

$य^4-४ य^2+४-४ य^2+१२=य^4-८ य^2+१६=(य^2-४)^2$

घातार्ध में स्वल्पराशि जोड़ने पर

$$\frac{(य^2-२)(२ य)}{२}+२ य=\frac{२ य^3-४ य}{२}+२य=य^3-२य+२य$$

$=य^3=(य)^3$

पदयोग= $य+१+य-१+य^2+य^2-४+य$
$=२य^2+३ य-४$। इसमें दो जोड़ने पर
$=२ य^2+३ य-२$=वर्गात्मक=$क^2$

अतः $२ य^2+३ य-२=क^2$

$\therefore २ य^2+३ य=क^2+२$

$\therefore १६ य^2+२४ य=८ क^2+१६$

$\therefore १६ य^2+२४ य+९=८ क^2+२५$

मूल ग्रहण करने पर

$४ य+३=\sqrt{८ क^2+२५}$

वर्गप्रकृति द्वारा कल्पित कनिष्ठ=५

अतः $(५)^2\times८+२५=२२५$,

$\therefore\sqrt{२२५}=१५$=ज्येष्ठ

अतः ५=क

$४ य+३=१५$

$\therefore य=\frac{१२}{४}=३$

अतः लघु राशि=६, बृदद्राशि=९–२=७

यदि कनिष्ठ=१७५ तो ज्येष्ठ=४९५

अतः क=१७५

$य=\frac{४९५-३}{४}=\frac{४९२}{४}=१२३$

अतः लघुराशि $=$ २य $=$ २४६

बृहद्राशि $=$ य$^{२}$ $-$ २ $=$ १५१२९ $-$ २ $=$ १५१२७

### अथवा ग्रंथकारोक्त द्वितीय प्रकार

प्रथम राशि $=$ य$^{२}$ $+$ २ य $-$ १, द्वितीय राशि $=$ २ य $+$ २

राशियोग $+$ ३ $=$ य$^{२}$ $+$ २ य $-$ १ $+$ २ य $+$ २ $+$ ३ $=$

य$^{२}$ $+$ ४ य $+$ ४ $=$ ( य $+$ २ )$^{२}$

राश्यान्तर $+$ ३ $=$ य$^{२}$ $+$ २ य $-$ १ $-$ ( २ य $+$ २ ) $+$ ३

य$^{२}$ $-$ ३ $+$ ३ $=$ य$^{२}$ $=$ (य)$^{२}$

वर्गैक्य $-$ ४ $=$ ( य$^{२}$ $+$ २ य $-$ १ )$^{२}$ $+$ ( २ य $+$ २ )$^{२}$ $-$ ४ $=$

य$^{४}$ $+$ ४ य$^{३}$ $-$ २ य$^{२}$ $+$ ४ य$^{२}$ $-$ ४ य $+$ १ $+$ ४ य$^{२}$ $+$ ८ य $+$ ४ $-$ ४

$=$ य$^{४}$ $+$ ४ य$^{३}$ $+$ ६ य$^{२}$ $+$ ४ य $+$ १ $=$ ( य$^{२}$ $+$ २ य $+$ १ )$^{२}$

वर्गान्तर $+$ १२ $=$ य$^{४}$ $+$ ४ य$^{३}$ $-$ २ य$^{२}$ $+$ ४ य$^{२}$ $-$ ४ य $+$ १ $-$ ४ य$^{२}$ $-$ ८ य $-$ ४ $+$ १२

$=$ य$^{४}$ $+$ ४ य$^{३}$ $-$ २ य$^{२}$ $-$ १२ य $+$ ९ $=$ ( य$^{२}$ $+$ २ य $-$ ३ )$^{२}$

घातार्ध $+$ लघुराशि $=$ $\dfrac{(\text{य}^2+२\ \text{य}-१)\ (२\ \text{य}+२)}{२}$ $+$ २ य $+$ २

$=$ $\dfrac{२\ \text{य}^3+४\ \text{य}^2-२\ \text{य}+२\ \text{य}^2+४\ \text{य}-२}{२}$ $+$ २य $+$ २ $=$

$=$ $\dfrac{२\ \text{य}^3+६\ \text{य}^2+२\ \text{य}-२}{२}$ $+$ २ य $+$ २

$=$ य$^{३}$ $+$ ३ य$^{२}$ $+$ य $-$ १ $+$ २ य $+$ २

$=$ य$^{३}$ $+$ ३ य$^{२}$ $+$ ३ य $+$ १ $=$ ( य $+$ १ )$^{३}$

पदयोग $=$ य $+$ २ $+$ य $+$ य$^{२}$ $+$ २ य $+$ १, $+$ य$^{२}$ $+$ २ य $-$ ३ $+$ य $+$ १

$=$ २ य$^{२}$ $+$ ७ य $+$ १ ।

पदयोग $+$ २ $=$ २ य$^{२}$ $+$ ७ य $+$ ३ $=$ प्रश्नानुसार वर्गात्मक $=$ क$^{२}$

$\therefore$ २ य$^{२}$ $+$ ७ य $=$ क$^{२}$ $-$ ३

$\therefore$ १६ य$^{२}$ $+$ ५६ य $=$ ८ क$^{२}$ $-$ २४

$\therefore$ १६ य$^{२}$ $+$ ५६ य $+$ ४९ $=$ ८ क$^{२}$ $+$ २५

मूल ग्रहण करने पर

४ य $+$ ७ $=$ $\sqrt{८\ \text{क}^2+२५}$

वर्गप्रकृत्या कल्पित कनिष्ठ $=$ ५

अतः ज्येष्ठ=$\sqrt{(५)^२\times८+२५}=\sqrt{२२५}=१५$

अतः कनिष्ठ=५=क

४ य+७=१५ ∴ य=$\frac{८}{४}$=२

∴ प्रथम राशि=$(२)^२+२\times२-१=८-१=७$

द्वितीय राशि=२×२+२=६ ।

अथवा यदि कनिष्ठ = १७५ तदा ज्येष्ठ=४९५

अतः ४ य+७=४९५

∴ ४ य=४८८

∴ य=१२२

उत्थापन देने पर—

प्रथम राशि=$(१२२)^२+२\times१२२-१=१५१२७$

द्वितीय राशि=२ य+२=१२२×२+२=२४६

इन राशियों से सभी आलाप सरलतया मिल जायेंगे।

**यत्राऽव्यक्तं सरूपं हि तत्र तन्मानमानयेत् ।**
**सरूपस्यान्यवर्णस्य कृत्वा कृत्यादिना समम् ।।१३।।**
**राशिं तेन समुत्थाप्य कुर्याद्भूयोऽपरां क्रियाम् ।**
**सरूपेणान्यवर्णेन कृत्वा पूर्वपदं समम् ।। १४ ।।**

यत्राद्यपक्षमूले गृहीते परपक्षेऽव्यक्तं सरूपमरूपं वा स्यात् तत्रान्यवर्णस्य सरूपस्य वर्गेण साम्यं कृत्वा तस्याव्यक्तस्य मानमानीय तेन राशिमुत्थाप्य पुनरन्यां क्रियां कुर्यात् तथा तेनान्यवर्णेन सरूपेणाद्यपक्षपदसाम्याच्च यदि पुनः क्रिया न भवेत् तदा तु व्यक्तेनैव वर्गादिना समक्रिया ।।

सुधा—एक पक्ष के मूल ग्रहण के बाद दूसरे पक्ष में सरूप अव्यक्त या अरूप अव्यक्त रहे तो उसे सरूप अन्य वर्ण के वर्गादि के साथ समीकरण करके उस अव्यक्त का मान लाकर उस मान से राशि का उत्थापन तथा आद्यपक्षीय मूल का कल्पित रूप सहित अन्य वर्ण के साथ समीकरण करके अन्य क्रिया करनी चाहिए।

अन्य क्रिया करने के अवसराभाव में सरूप अन्यवर्ण के वर्गादि के साथ समीकरण न कर व्यक्त राशि के वर्गादि के साथ समीकरण करे जिससे राशि का मान व्यक्त हो सके।

वासना– यथा कल्प्येते समौ पक्षौ $य^2$ = इ.क+रू ∴ य=$\sqrt{इ.क+रू}$ अत्र क मानस्य वर्गत्वाभावान्न वर्गप्रकृते विषयः। अतः कल्प्यते $\sqrt{इ.क+रू}$= इ' न + रू'= य अत उपपन्नं सरूपेनान्यवर्णेनेत्यादि।

**यस्त्रिपञ्चगुणो राशिः पृथक् सैकः कृतिर्भवेत्।**
**वदेति बीजमध्येऽसि मध्यमाहरणे पटुः ॥१॥**

अत्र राशिः या १। एष त्रिगुणः सैकः या ३ रू १। अयं वर्ग इति कालकवर्गसमं कृत्वा पक्षयोः रूपं १ प्रक्षिप्य मूलम् का १। अन्यपक्षस्यास्य या ३ रू १। सरूपनीलकत्रयस्य वर्गेण नीव ९ नी ६ रू १ साम्यं कृत्वा लब्धयावत्तावन्मानेनोत्थापितो जातो राशिः नीव ३ नी २ पुनरयं पञ्चगुणः सैको वर्ग इति नीव १५ नी १० रू १ पीतकवर्गसमं कृत्वा समशोधने कृते पक्षौ नीव १५ नीव १०, पीव १ रू १̇।

इमौ पञ्चदशभिः संगुण्य पञ्चविंशतिरूपाणि प्रक्षिप्याद्यपक्षस्य मूलं नी १५ रू ५। परपक्षस्यास्य पीव १५ रू १०। वर्गप्रकृत्या मूले क ९ ज्ये ३५ वा क ७१ ज्ये २७५। कनिष्ठं पीतकमानं ज्येष्ठमाद्यपक्षस्य मूलेनानेन नी १५ रू ५ समं कृत्वाऽऽप्तं नीलकमानन् २ वा १८। स्वस्वमानेनोत्थाप्य जातो राशिः १६ वा १००८।

अथवैकालापः स्वत एव संभवति तथा कल्पितो राशिः याव $\frac{१}{३}$ रू $\frac{१̇}{३}$। एष पञ्चगुणो रूपयुतः याव $\frac{५}{३}$ रू $\frac{२̇}{३}$ मूलद इति कालकवर्गसमं कृत्वा पक्षयो ऋणत्र्यंशद्वयं प्रक्षिप्योक्तवद्गृहीतं कालकपक्षस्य मूलम् का १। द्वितीयपक्षस्यास्य याव $\frac{५}{३}$ रू $\frac{२}{३}$। वर्ग प्रकृत्या मूले क ७ ज्ये ९ वा क ५५ ज्ये ७१। अत्र कनिष्ठं प्रकृतिवर्णमानं तेन कल्पितराशिमुत्थाप्य जातो राशिः स एव १६ वा १००८ ॥

सुधा—कौन सी राशि है जिसे अलग-अलग तीन, पाँच से गुण कर एक युक्त करते हैं तो वर्गात्मक हो जाती है।

यदि बीज के मध्यमाहरण में पटुता है तो बतलाओ।

कल्पित राशि = य

प्रश्नानुसार

$३ \times य + १ = ३य + १ = क^2$

$\therefore क = \sqrt{३य + १}$

यहाँ द्वितीय पक्ष का मूल मिलना सम्भव नहीं अतः सरूप इन ( ३न+१ ) के वर्ग के साथ इसका समीकरण किया गया —

$३य + १ = ( ३न + १ )^२ = ९न^२ + ६न + १$

$\therefore ३य = ९न^२ + ६न$

$\therefore य = ३न^२ + २न$

अतः पूर्व कल्पित राशि $= ३न^२ + २न$

दूसरे आलाप के अनुसार

$( ३न^2 + २न) \times ५ + १ =$ वर्गात्मक $= प^२$

$१५न^2 + १०न + १ = प^२$

$\therefore १५न^2 + १०न = प^2 - १$

$\therefore १५ ( १५न^2 + १०न ) = ( प^२ - १ ) \times १५$

$२२५न^२ + १५०न = १५प^२ - १५$

$\therefore २२५न^2 + १५०न + २५ = १५प^2 - १५ + २५ = प^2 + १०$

पक्षों के मूल लेने पर

$\therefore १५न + ५ = \sqrt{१५प^2 + १०}$

यहाँ वर्ग प्रकृति की प्रवृत्ति हो गई।

अत: यदि कनिष्ठ = ९ तो

ज्येष्ठ $= \sqrt{( ९ )^२ \times १५ + १०} = \sqrt{८१ \times १५ + १०} = \sqrt{१२२५} = ३५$

= ज्येष्ठपद। ज्येष्ठ = पूर्व पक्षीय मूल

$\therefore १५न + ५ = ३५$

$\therefore न = २$

अथवा यदि कनिष्ठ = ७१ तो ज्येष्ठपद = २७५

तो $१५न + ५ = २७५$

$\therefore १५न = २७०$

$\therefore न = १८$

न मान से उत्थापन देने पर

कल्पित राशि $= य = ३न^२ + २न = ३ \times ४ + ४ = १६$

अथवा $य = ३ ( १८ )^2 + २ \times १८ =$

$३ \times ३२४ + ३६ = ९७२ + ३६ = १००८$

अथवा ग्रन्थकारोक्त ही

प्रकारान्तर—

प्रथमालाप घटित कल्पित राशि $= \frac{य^२ - १}{३}$

इसे तीन से गुणा कर एक जोड़ने पर $य^२$ के समान है। अतः प्रथम आलाप इस राशि से घटित है ही—

द्वितीयालापानुसार

$\left(\frac{\text{य}^2-१}{३}\right)\times५+१=\frac{५\text{य}^2-५}{३}+१=\frac{५\text{य}^2-२}{३}$ = यह प्रनानुसार वर्गात्मक है।

$\therefore \frac{५\text{य}^2-२}{३}=\text{क}^2$

$\therefore \frac{२५\text{य}^2-१०}{३}=५\text{क}^2$

$\therefore २५\text{य}^2=१५\text{क}^2+१०$

$\therefore ५\text{य}=\sqrt{१५\text{क}^2+१०}$ यहां भी वर्ग प्रकृति से यदि कल्पित इष्ट कनिष्ट = ९ तो—

ज्येष्ठपद $=\sqrt{(९)^2\times१५+१०}=\sqrt{८१\times१५+१०}=३५$

ज्येष्ठपद = ३५ = ५य

$\therefore$ य = ७

उत्थापन से राशि $=\frac{\text{य}^2-१}{३}=\frac{४९-१}{३}=१६$ = राशि

अथवा यदि इष्ट कनिष्ठ = ७१ तो ज्येष्ठ = २७५

$\therefore$ ५य = २७५ $\therefore$ य = ५५

उत्थापन से राशि $=\frac{\text{य}^2-१}{३}=\frac{(५५)^2-१}{३}=\frac{३०३५-१}{३}$

$=\frac{३०२४}{३}=१००८$

आलाप सरल है यथा यदि राशि = १६

१६ × ३ + १ = ४९ = वर्गात्मक
१६ × ५ + १ = ८१ = वर्गात्मक

## अथाद्योदाहरणम्—

**को राशिस्त्रिभिरभ्यस्तः सरूपो जायते घनः।**
**घनमूलं कृतीभूतं त्र्यभ्यस्तं कृतिरेकयुक् ॥ २ ॥**

अत्र राशिः या १। अयं त्र्यभ्यस्तो रूपयुतः या ३ रू १। एष घन इति कालकघनसमं कृत्वा प्राग्वज्जातो राशिः काघ $\frac{१}{३}$ रू $\frac{\dot{१}}{३}$। अस्य त्रिगुणस्य सरूपस्य घनमूलं वर्गितं त्रिहतं रूपयुतं काव ३ रू १। एतत्

कृतिरिति नीलकवर्गसमं कृत्वा पक्षयो रूपं प्रक्षिप्य प्रथमपक्षमूलम् नी १। द्वितीयपक्षस्यास्य काव ३ रू१ वर्गप्रकृत्या मूले क १ ज्ये २ वा क ४ ज्ये ७ वा क १५ ज्ये २६। कनिष्टं कालकमानम् ४। अस्य घनेन ६४ उत्थापितो जातो राशिः २१ वा $\frac{३३७४}{३}$।

सुधा—वह कौन सी राशि है जिसे तीन से गुणाकर एक जोड़ने से धनात्मक बन जाती है।

उस घनमूल के वर्ग को तीन से गुणाकर एक जोड़ने से वर्गात्मक हो जाता है तो राशि क्या है ?

कल्पित राशि = य

प्रश्नानुसार ३ × य + १ = धनात्मक = $क^3$

$\therefore$ य = $\frac{क^3 - १}{३}$। इससे प्रथम आलाप घटित हो जायगा अर्थात्

$\left(\frac{क^3 - १}{३}\right)$ को ३ से गुणा कर एक जोड़ने से $क^3$ बचता है जिसका घनमूल = क अतः दूसरे आलाप के अनुसार

$(क)^2 \times ३ + १$ = वर्गात्मक

$\therefore ३क^2 + १ = न^2 \quad \therefore \sqrt{३क^2 + १} = न$

यहाँ भी वर्ग प्रकृत्या यदि कल्पित कनिष्ठ = ४ तो

$\sqrt{(४)^2 \times ३ + १} = ७$ = ज्येष्टपद

ज्येष्ठ = ७ = न, कनिष्ठ = ४ = क

अतः उत्थापन से $य = \frac{क^3 - १}{३} = \frac{६४ - १}{३} = २१$

अथवा कनिष्ठ यदि = १५ तो ज्येष्ठपद = २६

अतः कनिष्ठ = १५ = क

ज्येष्ठ = २६ = न

उत्थापन से $य = \frac{क^3 - १}{३} = \frac{(१५)^3 - १}{३} = \frac{३३७५ - १}{३} = \frac{३३७४}{३}$ = राशि।

आलाप—$२१ \times ३ + १ = ६४ = (४)^3$

$(४)^2 \times ३ + १ = ४८ + १ = ४९ = (७)^2$

इसी तरह दूसरी राशि से भी आलाप घटित होगा।

## उदाहरणम्

वर्गान्तरं कयोः राश्योः पृथक् द्वित्रिगुणं त्रियुक् ।
वर्गौ स्यातां वा क्षिप्रं षट्कपञ्चकयोरिव ॥ ३ ॥

क्वचिदादेः क्वचिन्मध्यात् क्वचिदन्त्यात् क्रिया बुधैः ।
आरभ्यते यथा लघ्वी निर्वहेच्च यथा तथा ॥

अतोऽत्र वर्गान्तरम् या १। एतद्द्विघ्नं त्रियुतं या २ रू ३ वर्ग इति कालकवर्गसमं कृत्वाऽऽप्तयावत्तावन्मानेनोत्थापितो जातो राशिः कावर्ग $\frac{१}{२}$ रू $\frac{३}{२}$ पुनरिदं त्रिघ्नं त्रियुतम् काव $\frac{३}{२}$ रू $\frac{३}{२}$ वर्ग इति नीलकवर्गसमं कृत्वा समशोधने कृते जातौ पक्षौ $\left\{ \begin{matrix} \text{नीव २ रू ३} \\ \text{काव ३} \end{matrix} \right.$। एतौ त्रिभिः संगुण्य कालकपक्षमूलम् का ३। परपक्षस्यास्य नीव ६ रू ९ वर्गप्रकृत्या मूले क ६ ज्ये १५ वा क ६० ज्ये १४७। ज्येष्ठं प्रथमपक्षपदेन का ३ समं कृत्वा लब्धं कालकमानम् ५ वा ४९। प्राग्वदाप्तकालकमानेनोत्थापितं जातं वर्गान्तरं राश्योः ११ वा ११९९। इदमन्तरहृतं द्विधाऽन्तरेणोनयुतमर्धितं राशी भवत इति प्रागुक्तमतोऽन्तरमिष्टं रूपं प्रकल्प्य जातौ राशी ६, ५ वा ६००, ५९९। अथ वाऽन्तरमेकादश प्रकल्प्य जातौ राशी ६०, ४९ ॥

सुधाः—पाँच छे की तरह कौन सी दो राशियाँ हैं. जिनके वर्गान्तर को अलग २ दो तीन से गुणाकर तीन जोड़ते हैं तो वर्गात्मक बन जाता है, शीघ्र बतलाओ ।

यहाँ राशि कल्पना से क्रिया का चलना असम्भव है अतः राशियों का वर्गान्तर = य, माना गया ।

इसी सम्बन्ध में ग्रन्थकार ने कहा है कि—

कहीं प्रश्न के आरम्भ से, कहीं प्रश्न के मध्य से और कहीं अन्त्य से क्रिया करनी चाहिए जिससे क्रिया का विस्तार नहीं हो और आगे चल भी सके ।

यहाँ राशियों का वर्गान्तर = य

प्रश्नानुसार $२ \times य + ३ = क^2$

$\therefore २य + ३ = क^2$

$$\therefore \text{य} = \frac{\text{क}^2 - ३}{२} = \text{वर्गान्तर}$$

पुनः द्वितीयालापानुसार

$$\left(\frac{\text{क}^2 - ३}{२}\right) \times ३ + ३ = \frac{३\text{क}^2 - ९}{२} + ३ = \frac{३\text{क}^2 - ३}{२} = \text{न}^2$$

$\therefore ३\text{क}^2 = २\text{न}^2 + ३$

वा $९\text{क}^2 = ६\text{न}^2 + ९$

$\therefore ३\text{क} = \sqrt{६\text{न}^2 + ९}$

वर्ग प्रकृति के द्वारा यदि कल्पित इष्ट कनिष्ठ = ६ तो ज्येष्ठ = १५

नियमानुसार ६ = न

$३\text{क} = १५ \;\therefore\; \text{क} = ५$

उत्थापन से पूर्वकल्पित वर्गान्तर $= \text{य} = \frac{\text{क}^2 - ३}{२} = \frac{२५ - ३}{२} = ११$

अथवा यदि कनिष्ठ = ६० तो ज्येष्ठपद = १४७

$\therefore ३\text{क} = १४७ \;\therefore\; \text{क} = ४९$

अतः $\text{य} = \frac{(४९)^2 - ३}{२} = \frac{२३९८}{२} = ११९९$

इस तरह आनीत य का मान = ११ = राशिद्वय का वर्गान्तर है। यदि कल्पित राश्यान्तर = १

तो 'वर्गान्तरं राशिवियोगभक्तं योगः' के अनुसार $\frac{११}{१} = ११$ = राशियोग

राश्यान्तर = १

अतः संक्रमण से

$\frac{११ - १}{२} = ५$ = लघुराशि

$\frac{११ + १}{२} = ६$ = बृहद्राशि।

यदि वा वर्गान्तर = ११९९ में कल्पित इष्टराश्यान्तर ११ से भाग देने पर = १०९ = राशियोग

११ = राश्यान्तर

अतः संक्रमण से

$\frac{१०९ - ११}{२} = ४९$ = लघुराशि

$$\frac{१०९ + ११}{२} = ६०$$ वृहद्राशि।

इन दोनों राशियों के वर्गान्तर को दो से गुणा कर तीन जोड़ने से

$\{(६०)^2 - (४९)^2\} \times २ + ३ = २४०१ = (४९)^2$

वा $\{(६०)^२ - (४९)^2\} \times ३ + ३ = ३\ (३६०० - २४०१) + ३$

$३५९७ + ३ = ३६०० = (६०)^२ =$ वर्गात्मक

अतः सभी आलाप घट गए।

## अन्यत्करणसूत्रं सार्धवृत्तम्—

**वर्गादेर्यो हरस्तेन गुणितं यदि जायते।**
**अव्यक्तं तत्र तन्मानमभिन्नं स्याद्यथा तथा॥ १५॥**
**कल्प्योऽन्यवर्णवर्गादिस्तुल्यः शेषं यथोक्तवत्।**

यत्र वर्गादौ कुट्टकादौ वा एकपक्षमूले गृहीतेऽन्यपक्षेऽव्यक्तवर्गादिकस्य यो हरस्तेन गुणितमव्यक्तं यदि स्यात् तदा तस्य मितिरभिन्ना यथा स्यात् तथाऽन्यवर्णवर्गादिः सरूपो रूपोनो वा तुल्यः कल्प्यः शेषं पूर्वसूत्रोक्तम्॥

सुधा—प्रथम पक्ष के मूलग्रहणान्तर द्वितीत पक्ष में वर्गादि के हरसेगुणित अव्यक्त हो वहाँ अव्यक्त का मान जैसे अभिन्न हो, वैसे उसे अन्य वर्ण वर्गादि के समान कल्पना करनी चाहिये। शेष पूर्वोक्तवत् समझना।

वासना—

यथाऽत्र कल्प्ते $\frac{य^२ - १}{ह} = क$

$\therefore य^२ = ह.\ क + १$

एतादृक् स्थितावेव सूत्रास्यस्य प्रवृत्तिः तत्र कथमभिन्नं क मान मित्यग्रे हरभक्ता यस्य कृतिरित्यादिना वक्ष्यते ग्रंथकृता।

उदाहरणम्—

**को वर्गश्चतुरूनः सन् सप्तभक्तो विशुध्यति।**
**त्रिंशदूनोऽथवा कः स्याद्यदि वेत्सि वद द्रुतम्॥ १॥**

अत्र राशिः या १। अस्य वर्गश्चतुरूनः सप्तभक्तो विशुध्यतीति लब्धिप्रमाणं कालकस्तद्गुणितहरेणोस्य याव १ रू ४̇ साम्यं कृत्वा प्रथमपक्षमूलम् या १। परपक्षस्यास्य का ७ रू ४̇ मूलाभावात् 'वर्गा-

देर्यो हरस्तेन गुणितं यदि जायते" इत्यादिना करणेन नीलसप्तकस्य रूपद्वयाधिकस्य वर्गेण तुल्यं कृत्वा लब्धं कालकमानमभिन्नं जातम् नीव ७ नी ४। यत् तु कल्पितं तस्य द्वितीयपक्षस्य मूलम् नी ७ रू २। इदं प्राक्पक्षमूलस्यास्य या १ समं कृत्वाऽऽप्तं यावत्तावन्मानं नी ७ रू २ सक्षेपम् ९। अस्य वर्गो राशिः स्यात् ८१ ॥

सुधा—वह कौन सा वर्गात्मक राशि है जिसमें चार या ३० घटा कर सात से भाग देने पर विशुद्ध हो जाती है, यदि जानते तो शीघ्र बतलाओ।

कल्पित राशि $= \text{य}^2$ ।

अतः प्रश्नानुसार

$$\frac{\text{य}^2 - ४}{७} = \text{क}। \quad \therefore \text{य}^2 = ७\text{क} + ४$$

$$\text{वा } \text{य} = \sqrt{७\text{क} + ४} \text{ इसका मूल है।}$$

यहाँ द्वितीय पक्ष में वर्ग प्रकृति की प्रवृत्ति नहीं हुई अतः ( ७न + २ ) के वर्ग के साथ ७क + ४ का समीकरण किया अर्थात्

$$७\text{क} + ४ = (७\text{न} + २)^2$$

$$= ४९\text{न}^2 + २८\text{न} + ४ \text{ ।}$$

$$\therefore \text{क} = \frac{४९\text{न}^2 + २८\text{न}}{७} =$$

$$७\text{न}^2 + ४\text{न} \text{ यह अभिन्न है।}$$

$$\because \text{य} = \sqrt{७\text{क} + ४} = ७\text{न} + २$$

$$\therefore \text{य} = ७\text{न} + २ \text{ यदि } \text{न} = १$$

$$\text{तो } \text{य} = ७ + २ = ९$$

$$\therefore \text{राशि} = ९^2 = ८१$$

यही ८१ राशि है जिसे चतुरूनित करने पर

८१ - ४ = ७७। इसमें ७ से भाग देने पर

$$\frac{७७}{७} = ११ = \text{निः शेष।}$$

त्रिंशदूनित वाला उदाहरण आगे स्पष्ट होगा।

अथवाऽन्यवर्णकल्पनायां मन्दावबोधाय पूर्वैरुपायः पठितः तत्र सूत्राणि :—

**हरभक्ता यस्य कृतिः शुध्यति सोऽपि द्विरूपपदगुणितः**

**तेनाहतोऽन्यवर्णो रूपपदेनान्वितः कल्प्यः ॥१६॥**

**न यदि पदं रूपाणां क्षिपेद्धरं तेषु हारतष्टेषु ।**
**तावद्यावद्वर्गो भवति न चेदेवमपि खिलं तर्हि ॥१७॥**
**हित्वा क्षिप्त्वा च पदं यत्राद्यस्येह भवति तत्रापि ।**
**आलापित एव हरो रूपाणि तु शोधनादिसिद्धानि ॥१८॥**

हरभक्तेति। यस्याङ्कस्य कृतिर्हरभक्ता सती शुध्यतीति निःशेषा भवति अपि च सोऽप्यङ्को द्वाभ्यां रूपपदेन च गुणितो हरभक्तः सन् शुध्यति तदा तेनाङ्केन हतोऽन्यवर्णस्तेन रूपेणान्वितः कल्प्यः। यदि तु रूपाणां पदं न तदा तेषु हरतष्टेषु रूपेषु तावद्धरं क्षिपेत् यावद्वर्गो भवेत् तन्मूलं रूपपदं भवेत्। एवमपि कृते चेद्वर्गः कदाचिन्न भवेत् तदा तदुदाहरणं खिलं स्यात्। यत्र तु आद्यपक्षस्य मूलं "हित्वा क्षिप्त्वा" इत्यादिना लभ्यते तदा हर आलापित एव ग्राह्यो न तु गुणितो विभक्तो वा। रूपाणि तु समशोधने कृते शोधनादिसिद्धानि यानि तान्येव ग्राह्याणि। एवं घनेऽपि योज्यं तद्यथा यस्याङ्कस्य घनो हरभक्तः शुध्यति तथा च सोऽप्यङ्कस्त्रिभी रूपाणां घनमूलेन च गुणितो हरभक्तः शुध्यति तदा तेनाङ्केन हतोऽन्यवर्णो रूपाणां घनमूलेन वान्वितः कल्प्यः यदि रूपाणां घनमूलं न लभ्यते तदा तेषु रूपेषु हरतष्टेषु तावद्धरं क्षिपेद्यावद्घनो भवेत्। तच्च घनमूलं रूपपदं स्यात्। एवमपि कृते च घनः कदाचिन्न भवेत् तदुदाहरणं खिलं स्यादित्यग्रेऽपि योज्यमिति शेषः।

अथ द्वितीयोदाहरणे राशिः या १। अस्य यथोक्तं कृत्वाऽऽद्यपक्षस्य मूलम् या १। परपक्षस्यास्य का ७ रू ३०। "न यदि पदं रूपाणाम"—इत्यादिकरणेन हारतष्टरूपेषु द्विगुणं हरं प्रक्षिप्य मूलम् ४। एतदधिकनीलकसप्तकवर्गसमीकरणादिना प्राग्वज्जातो राशिः नी ७ रू ४।

अथ यदि ऋणरूपैरन्वितं नीलकसप्तकं नी ७ रू ४̇ परिकल्प्यानीयते तदाऽन्योऽपि राशिः ३ स्यात्॥

सुधाः—

'वर्गादेर्योहर' इत्यादि सूत्र में अन्य वर्ण के वर्गादि के समान अव्यक्त मान को कल्पित करने की बात कही गई है. वह कल्पना कैसी हो इसे इन सूत्रों के के द्वारा स्पष्ट किया जा रहा है।

जिस का वर्ग हर भक्त होने पर विशुद्ध हो जाय उसे दो और रूप पद से गुणित कर गुणन फल गुणित अल्पवर्ण में रूप पद जोड़ के, उसे अन्य पक्ष का मूल [illegible] करें।

यदि रूप का पद नहीं मिले तो हरभक्त रूपों में तब तक हर जोड़ें जब तक वह वर्गात्मक न हो जाए। इस प्रकार सिद्ध वर्ग के मूल को रूप पद मानें।

यदि इस तरह से भी रूप पद प्राप्य नहीं हो तो उस उद्दिष्ट (प्रश्न) को अशुद्ध समझें।

जहाँ दोनों पक्षों को किसी से गुणने, रूप जोड़ने आदि के बाद प्रथम पक्ष का मूल प्राप्त हो वहाँ=पूर्वोक्त हव, और गुणन योजनादि के बाद आगत रूप को रूप मानना चाहिए।

यहाँ 'हरभक्ता यस्य कृतिः' उपलक्षण मात्र है अतः हर भक्त किसी का घन भी यदि निःशेष हो तो उसे तीन और रूप के घन मूल से गुणा कर गुणनफल में हर से भाग दें। निःशेष होने पर उसमें अन्य वर्ण को गुणाकर रूप घन पद जोड़कर अन्य पक्षीय मूल मानें। यदि रूप का घनमूल नहीं मिले तो हर तष्टित रूप में तब तक हर जोड़े जब तक वह घनमूलप्रद न हो जाय। इस तरह सिद्ध घनमूल को रूप पद समझे। ऐसे करने पर भी यदि घनमूल प्राप्य नहीं हो तो प्रश्न को दुष्ट समझें।

वासना—

'वर्गादि' यों हर' इत्यादि सूत्रे

$$\text{य}^2 = \text{ह}.\ \text{क} + \text{रू}\ \text{इति कल्पितम्}$$

यद्यत्र रू वर्गात्मकं तदाऽपरपक्ष मूल $(\text{न}.\ \text{इ}_1 + \sqrt{\text{रू}})$

मिति कल्पितम्।

$$\text{अतः}\ \text{य}^2 = \text{ह}.\ \text{क} + \text{रू} = (\text{न}\ \text{इ}_1 + \sqrt{\text{रू}})^2$$

$$\text{अतः}\ \text{ह}.\ \text{क} + \text{रू} = \text{न}^2.\ \text{इ}^2_1 + 2\text{न}.\ \text{इ}_1 \sqrt{\text{रू}}. + \text{रू}.$$

$$\therefore \text{ह}.\ \text{क} = \text{न}^2.\ \text{इ}^2_1 + 2\text{न}.\ \text{इ}_1 \sqrt{\text{रू}}$$

$$\therefore \text{क} = \frac{\text{न}^2.\ \text{इ}^2_1}{\text{ह}} + \frac{2\text{न}.\ \text{इ}_1 \sqrt{\text{रू}}}{\text{ह}} = \frac{\text{न}^2.\ \text{इ}^2}{\text{ह}} + \text{न}\ \frac{2\ \text{इ}_1 \sqrt{\text{रू}}}{\text{ह}}$$

अत्र यदि $\frac{\text{इ}^2_1}{\text{ह}}$ एतदभिन्नं तदं $\frac{2\text{इ}_1 \sqrt{\text{रू}}}{\text{ह}}$ तदप्यभिन्नमेव। अतः $\text{इ}^2_1$ तथा कल्पनीयो यथा हरभक्तः शुद्धयेदेवेत्यनेन रूपपदेनान्वितः कल्प्य इत्यन्तमुपपन्नम् यदि च रूपमवर्गात्मकम् अर्थात् पूर्वकल्पितेऽ (ह. क + रू) स्मिन् रू अस्य पदं न लभ्यते चेत्तदा कल्पयते क = प ÷ इ' − इ"

$\therefore$ ह. क = प. ह + इ'. ह − इ''. ह

$\therefore$ ह क + रू = प. ह + इ'. ह − इ''. ह + रू

अत्र यदि इ' ह − इ''.ह + रू एतद् वर्गात्मकं रू' समञ्च

तदा ह क + रू = प. ह+रू'

अत्र रू' अस्य वर्गात्मकत्वात् पूर्वयुक्तयाऽस्य मानं ज्ञातुं शक्यम्। उक्त-युक्तया वर्गात्मकत्वाभावे तदुदाहरणमेव दुष्टमिति तावद् यावद्वर्ग इत्यन्त्य-मुपपन्नम्।

अत्र यदि $य^3$ = ह. क + रू यत्र 'रू' इत्यस्य धनमूलं लभ्यते तदाऽत्रापि पूर्वयुक्तया

$$य = इ. न + \sqrt[3]{रू} \therefore य^3 = (इ\ न + \sqrt[3]{रू})^3$$

$$= इ^3. न^3 + ३\ इ^2. न^2. \sqrt[3]{रू} + ३\ इ, न\ (\sqrt[3]{रू})^2 + रू = ह.क+रू$$

$$\therefore हक = न^3.इ^3 + ३इ^2.न^2.\sqrt[3]{रु} + ३न.इ \times (\sqrt[3]{रु})^2$$

$$\therefore क = \frac{न^3.इ^3 + ३इ^2.न^2.\sqrt[3]{रु} + ३न.इ \times (\sqrt[3]{रु})^2}{ह}$$

$$अथवा :— क = न^3.\frac{इ^3}{ह} + न^2.\frac{३इ^2.\sqrt[3]{रु}}{ह} + न.\frac{३इ(\sqrt[3]{रु})^2}{ह}$$

अत्रापि यदि $\frac{इ^3}{ह}$, $\frac{३इ^2.\sqrt[3]{रु}}{ह}$ एतद्द्वयमान मभिन्नं तदा कमानमप्यभिन्नं तेन यस्याङ्कस्य घनो हरभक्तः शुद्धयतीत्यादि मूलोक्तं गद्यमुपपद्यते।

सुधा—

'को वर्गश्चतुरून: सन्' इत्याद्युदाहरण में

$य^2 = ७क + ४$, है।

$\therefore य = \sqrt{७क+४}$ यहां द्वितीय पक्ष का मूल लाना है

यहाँ रु ४ का मूल २ होता है।

और 'को वर्गश्चतुरून:' के दूसरे उदाहरण त्रिशदूनोऽथवा कः स्यात् में ३० का मूल नहीं होता। अतः इसी 'कोवर्गश्चतुरून:' सम्पूर्ण को हरभक्ता यस्य कृतिः का सम्पूर्ण उदाहरण समझना चाहिए।

इन उदाहरणों में हर = ७।

सात का वर्ग हरभक्त होने पर शुद्ध हो जाता,

और $\frac{७ \times २ \times \sqrt{४}}{७} = ४$ शुद्ध है अतः

तेनाहतोऽन्यवर्णः के अनुसार

$$(७न + २)^2 = ७क + ४$$

$$\therefore ७क + ४ = ४९न^2 + २८न + ४$$

$$\therefore क = \frac{४९न^2 + २८न}{७} = ७न^2 + ४न$$

$$य^2 = ७क + ४ = (७न + २)^2$$

$$\therefore य = ७न + २$$

$$यदि\ न = १$$

$$तदा\ य = ७ + २ = ९$$

$$एवम्\ क = ७न^2 + ४न = ७ + ४ = ११$$

$$अतः\ राशि = य^2 = ८१ ।$$

उसी 'कोवर्गश्तुरूनः' के द्वितीयोदाहरणानुसार

$$\frac{य^2 - ३०}{७} = क$$

$$\therefore य^2 = ७क + ३०$$

$$वा\ य = \sqrt{७क + ३०}$$

यहाँ ३० अवर्गात्मक है, इसका पद नहीं मिलता अतः न यदि पदं रूपाणां क्षिपेद्धरं तेषु हार तष्टेषु" के अनुसार ३० को हार तष्टित करने पर शेष

$$\left( \frac{३०}{७} = ल + \frac{२}{७} \right)$$

२ में दो ही वार हार के जोड़ने पर

( अर्थात् २ + ७ + ७ = १६) = वर्गात्मक हो जाता जिसका पद = ४

इष्ट ७ का वर्ग सात से निश्शेष होता अतः सूत्रानुसार २ × . × ४ = ५६ यह भी हर ७ से निःशेष हो जायगा अतः सप्तगुणित अन्य वर्ण न रूपपद (४) युक्त के साथ पूर्वपद का समीकरण हुआ ।

$$अतः\ ७क + ३० = (७न + ४)^2 = ४९न^2 + ५६न + १६$$

$$\therefore ७क = ४९न^2 + ५६न - १४$$

$$\therefore क = \frac{४९न + ५६न - १४}{७} = ७न^2 + ८न - २$$

